ॐ

# रुद्रमन्त्रसहित-चमकानुवाकाः

पं० विश्वनाथ शर्मणा

स्वकीय "काश्मीर प्रताप स्टीम् प्रेस" नाम्नि

यन्त्रालये

विद्वद्वरद्वारा शोधयित्वा प्रकाशिताः ॥

—=:※:=—

प्रथमं संस्करणम्—

शाकाब्दाः १८४२ वैक्रमाब्दाः १९७७



मूल्यं ६ आना

ओ३म्

अथ

# ॥ रुद्रमन्त्रसहित-चमकानुवाकाः ॥

ॐ नमो भगवते महारुद्राय ॥

ॐ देवं सुधाकलशसोमकरं त्रिनेत्रं पद्मासनं च वरदाभयदं सुशुभ्रम् । शङ्खाभयाब्जवरभूषितया च देव्या वामेङ्कितं शमनभङ्गहरं नमामि ॥

शुम्भुं शूलपिनाकसोमकलशभ्राजिष्णुहस्ताम्बुजं देव्यालंकृतवामपार्श्वमुरगाधीशस्फुरत्कङ्कणम् । गङ्गागर्जितगर्भजूटममलं चन्द्रार्धमौलिं प्रभुं केनाशक्लेशनाशनिश्चितधियं भस्माङ्गरागं भजे ॥

यस्मात्सर्वमिदं प्रपञ्चरचितमादौ जगज्जायते
यस्मिंस्तिष्ठति लीयते तु समये जायेत कल्पं पुनः ।
यं ध्यात्वा मुनयो प्रपञ्चरहितं विन्दन्ति मोक्षं ध्रुवं
तं वन्दे पुरुषोत्तमाख्यमखिलं नित्यं विभुं निष्कलम् ॥

शुद्धस्फटिकसङ्काशं त्रिनेत्रं पञ्चवक्त्रकम् । गङ्गाधर दशभुजं सर्वाभरणभूषितम् ॥ नीलग्रीवं शशाङ्काङ्कं नागयज्ञोपवीतिनम् । व्याघ्रचर्मोत्तरीयं च वरेण्यमभयप्रदम् ॥ कमण्डल्वक्षसूत्राभ्यामन्वितं शूलपाणिकम् । ज्वलन्तं पिङ्गलजटाशिखमुद्द्योतकारिणम् ॥ अमृतेनाप्लुतं हृष्टमुमादेहार्धधारिणम् । दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् ॥ दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् । नित्यं च शाश्वतं शुद्धं ध्रुवमक्षरमव्ययम् ॥ सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् । एवं ध्यात्वा द्विजः सम्यक्ततो यजनमारभेत् ॥ मृत्युञ्जय महादेव पाहि मां शरणागतम् । जन्ममृत्युजरारोगैः पीडितं भवबन्धनैः ॥ इति विज्ञाप्य देवेशं जपेन्मन्त्रं च त्र्यम्बकम् ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥

१ नमः २ खा ३ रयिपोषणम् (शतपथम्)

आत्वावहन्तु हरयः सचेतसः[1] श्वेतैरश्वैरिह केतुमद्भि-र्वाताजवेन बलमद्भिर्मनोजवायातु शीघ्रं मम रुद्राय हव्यन्देवानां च ऋषीनां चासुराणां च पूर्वजं सहस्राक्षं विरूपाक्षं विश्वरूपं महादेवं शिवमावाहयाम्यहम् ॥ आवाहयाम्यहं देवमीश्वरं पार्वतीपतिम् । वृषभासनमारूढं नागाभरणभूषितम् । प्रीयतां यजमानस्य तुष्टो भूयाज्जगत्पतिः । शुक्लवर्णो महातेजाः शुक्लस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोऽयं प्रतिगृह्यताम् ॥

ॐ [2]तत्पुरुषाय विद्महे । महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥

आशुः शिशान इति शुक्रज्योतिष्मानंशुप्रजननं सर्वाः प्रजाः काश्यप्या इति कश्यपस्य वाजस्य प्रसवोऽग्नेः ॥

आशुः शिशानो वृषभो न [3]युध्मो घनाघनः क्षोभणश्चर्षणीनाम् । संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजय-

१ श्वेतरश्वैः सह २ षडाहुतयः ३ भीमो

त्साकमिन्द्रः ॥ संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना । तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ स इषुहस्तैः स निषङ्गिभिर्वशी सँस्त्रष्टासयुध इन्द्रो गणेन । सँसृष्टजित्सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ॥ बृहस्पते परिदीय रथेन रक्षोहामित्राँ अपबाधमानः । प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः । अभि वीरो अभि सत्वा सहोजा जैत्रमिन्द्ररथमातिष्ठ गोवित् ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा । इमँ सजाता अनु वीरयध्वमिन्द्रं सखायोऽनुसँ रभध्वम् ॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुध्योऽस्माकँ सेना अवतु प्र युत्सु ॥ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम् ।

१ शर्ध्युग्र २ धी ३ ष ४ सहोजिज्जैत्रामनो ५ उमा ६ मिन्द्रसखायमनु संरभध्वम् ७ एषां ८ दक्षिणा ९ यन्तु मध्ये ॥

महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषुवस्ता जयन्तु । अस्माकं वीरा उत्तरे भवन्त्वस्माँ२ उ देवा अवता हवेषु ॥

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च । सत्यश्चर्तपाश्चात्यँहाः ॥ ईदङ्‌चान्यादङ्‌ सदङ्‌ प्रतिसदङ्‌ । मितश्च सम्मितश्च सभराः ॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्त्ता च विधर्त्ता च विधारय ॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्तिमित्रश्च दूरे अमित्रश्च गणः ॥ ईदृक्षास एतादृक्षास ऊँ षु णः सदृक्षासः प्रतिसदृक्षास एतन मितासश्च सम्मितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥ इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन् । एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानु वर्त्मानो भवन्तु ॥

शतरुद्रियन्देवानां रुद्रशमनं भवाय शर्वायश्च प्रत्यु-

---

१ सप्त० दे २ सत्यश्च तपश्च इंहा (सत्यश्च ऋतपश्चा०) ३ ... ४ ... [illegible]

स्कान्तानुवाको देवर्षी रुद्रदैवत्यः त्रिष्टुप्छन्दश्चयने विनियोगः ॥ नमस्ते देवा रौद्रमानुष्टुभमाद्या गायत्री पञ्चमषष्ठ्यौ पङ्क्त्यन्त्या महापङ्क्तिर्मा भेरेकपदा जगत्यनुष्टुप्त्रिष्टुब्महाबृहती यवमध्या रुद्रो देवता चरमेष्टिका अस्य रुद्रस्य प्रश्नस्य अनुष्टुप्छन्दः अघोरऋषिः सङ्कर्षणमूर्तिः सुरूपो योऽसावादित्यः परः पुरुषः स एव देवता अग्निक्रतुचरमायामिष्टिकायाँ शतरुद्र[2]पाठे ( होमे ) विनियोगः ॥

सकलस्य रुद्राध्यायस्य श्रीमहारुद्रो देवता एका गायत्री छन्दः तिस्रोऽनुष्टुभः तिस्रः पङ्क्तयः समानुष्टुभो द्वे जगत्यौ परमेष्ठीऋषिः समस्तपापक्षयार्थे सकलकामनासिद्ध्यर्थे श्रीमहारुद्रदेवतासन्तोषणार्थे चमकानुवाकसहितरुद्रमन्त्रपाठे (होमे) विनियोगः ॥



१ एष रुद्रा २ रुद्रिय

ध्यानम् कर्पूरगौरं करुणावतारं संसारसारं भुजगे-न्द्रहारम् । सदा रमन्तं हृदयारविन्दे भवं भवानी-सहितं नमामि ॥

ध्याये नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

आपातालनभस्तलान्तभुवनब्रह्माण्डमाविःस्फुरज्ज्योतिः स्फाटिक-लिंगमौलिविलसत्पूर्णेन्दुबिम्बामृतैः । अस्तोकाप्लुतमेकमेकमनिशं रुद्रा-नुवाकं जपन्ध्यायन्नीप्सितसिद्धये द्रुतपदं विप्रोऽभिषिञ्चेच्छिवम् ॥

ॐ नमः शिवाय वरदाय ॥

ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः ॥ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी । तया नस्तन्वा शन्तमया गिरिशन्ता-

ऽभि चाकशीहि ॥ यामिषुं गिरिशन्त हस्ते विभ-
र्ष्यस्तवे। शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं
जगत् ॥ शिवेन वचसा त्वा गिरिशाच्छा वदामसि।
यथा नः सर्वमिज्जगदयक्ष्मँ सुमना असत् ॥ अध्य-
वोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहींश्च सर्वा-
ञ्जम्भयं सर्वांश्च यातुधान्योऽधराचीः परासुव ॥ अ-
सौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। ये चेमे
रुद्रा अभितो दिक्षु श्रिताः। सहस्रशोऽवैषाँ हेळ
ईमहे ॥ असौ योऽवसर्पति नीलग्रीवो विलोहितः।
उतैनं गोपा अदृशन्नुतैनमुदहार्यः ॥ उतैनं विश्वा
भूतानि स दृष्टो मृळयाति नः ॥ नमो अस्तु नील-
ग्रीवाय सहस्राक्षाय मीढुषे। अथो ये अस्य स-
त्वानोऽहं तेभ्योऽकरं नमः ॥ प्र मुञ्च धन्वनस्त्वमु-
भयोरार्त्न्योर्ज्याम्। याश्च ते हस्त इषवः परा ता

भगवो वप । विज्यं धनुः कपर्दिनो विशल्यो वाण-
वानुत ॥ अनेशन्नस्येषव आभुरस्य निषङ्गथिं ॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽ-
स्मान्विश्वतस्त्वमयक्ष्मेण परिब्भुज ॥ परि ते धन्व-
नो हेतिरस्मान्वृणक्तु विश्वतः । अथो य इषुधिस्त-
वाऽरे अस्मन्निधेहि तम् ॥ नमांसित आयुधायाऽना-
तताय धृष्णवे । उभाभ्यामुत ते नमो बाहुभ्यां तव
धन्वने ॥ अवतत्य धनुष्ट्वँ सहस्राक्ष शतेषुधे । नि-
शीर्य शल्यानाँ मुखँ शिवो नः सुमना भव ॥ यात
इषुः शिवतमा शिवं बभूव ते धनुः । शिवा शरव्या
या तव तया नो मृळ जीवसे ॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न
उक्षितम् । मा नो वधीः पितरं मोत मातरं मा नः प्रिया-
स्तन्वो रुद्र रीरिषः ॥ मा नस्तोके तनये मा न आयौ मा
नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो

र्धीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ विश्वेश्वर महादेव शिव साशिव सदाशिव त्रिकाल त्रिकालकाल कालाग्नि-शिख नीलकण्ठ महामृत्युञ्जयभट्टारक नमो नमः ॥

ॐ अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् ॥

वाजश्चमे प्रसवश्चमे प्रयतिश्चमे प्रसितिश्चमे धीतिश्चमे क्रतुश्चमे स्वरश्चमे श्लोकश्चमे श्रवश्चमे[2] श्रुतिश्चमे ज्योतिश्च मे स्वश्चमे[3] ❀प्राणश्चमेऽपानश्चमे व्यानश्चमेऽसुश्चमे चित्तंच म आधीतंचमे वाक्चमे मनश्चमे चक्षुश्चमे श्रोत्रश्चमे दक्षश्चमे बलंचम ❀ओजश्चमे सहश्चमे आत्माचमे तनूश्चमे शर्मचमे वर्मचमेऽङ्गानिचमेऽस्थीनिचमे परूंषिचमे शरीराणिचम आयुश्चमे जराचमे ॥ १ ॥

ॐ नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो । नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये

१ सृ २ श्रा ३ सुवश्च ४ स्था ❀ संहितायां तारकांक चिह्नितस्थानेष्वितः सर्वत्र "यजेन[illegible]"[illegible]

नमो । नमः शष्पिञ्जराय त्विषीमते पथीनां पतये नमो । नमो बभ्लुंशाय व्याधिनेऽन्नानां पतये नमो । नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो । नमो भवस्य हेत्यै जगतां[2]स्पतये नमो । नमो रुद्रायाततायिने क्षेत्राणां पतये नमो । नमः सूतायाहन्त्याय[3] वनानां पतये नमो । नमो रोहिताय स्थपतये वृक्षाणां पतये नमो । नमो मन्त्रिणे वाणिजाय कक्षाणां[4] पतये नमो । नमो भुवन्तये वारिवस्कृतायौषधीना पतये नमो । नम आक्रन्दायत उच्चैर्घोषाय सत्वानां पतये नमो । नमः कृत्सं[5] वीताय धावते पत्तीनां पतये नमो ।

ज्यैष्ठ्यञ्चम आधिपत्यञ्चमे मन्युश्चमे भामश्चमेऽमश्चमेऽम्भश्चमे जेमाचमे महिमाचमे वरिमाचमे प्रथिमाचमे वर्ष्मा[6]चमे द्राघ्वा[7]चमे वृद्धञ्चमे वृद्धिश्चमे सत्यञ्चमे श्रद्धा-

१ श्र २ तां ३ न्त्वा ४ चया ५ त्स्नं ६ वर्षिमा ७ द्राघिमा (द्राघुया)

चमे जगच्चमे धनञ्चमे वशश्चमे त्विषिश्चमे क्रीडाचमे मोदश्चमे जातंचमे जनिष्यमाणंचमे सूक्तञ्चमे सुकृतञ्चमे ❀ वित्तञ्चमे वेद्यंचमे भूतंचमे भविष्यच्चमे सुगञ्चमे सुपथ्यञ्च-मे ऋद्धञ्चम ऋद्धिश्चमे क्लृप्तञ्चमे क्लृप्तिश्चमे म-तिश्चमे सुमतिश्चमे ॥ २ ॥

नमः सहमानाय निव्याधिन आव्याधिनीनां प-तये नमो । नमो निषङ्गिणे ककुभाय स्तेनानां पतये नमो । नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो । नमो निचराय परिचरायारण्यानां पतये नमो । नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो । नमः सृकायिभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो । नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्रकृन्तानां पतये नमो । नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमः । नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो । नम इषु-मद्भ्यो धन्वायिभ्यश्च वो नमो । नम आतन्वानेभ्यः



२ मान्तं २ विद्यं (विद्या) ३ थं ४ वि

प्रतिदधानेभ्यश्च वो नमो। नम आयच्छद्भ्योऽस्यद्भ्यश्च वो नमो। नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो। नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो। नमः शयानेभ्य आसीनेभ्यश्च वो नमो। नमः तिष्ठद्भ्यो धावद्भ्यश्च वो नमो। नमः सभाभ्यः सभापतिभ्यश्च वो नमो। नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमः।

शञ्चमे मयश्चमे प्रियञ्चमेऽनुकामश्चमे कामश्चमे सौमनसश्चमे भगश्चमे द्रविणञ्चमे भद्रञ्चमे श्रेयश्चमे वस्यं[1]श्चमे यशश्चमे ⊛ यन्ताचमे धर्ताचमे क्षेमश्चमे धृतिश्चमे विश्वंचमे महश्चमे संविच्चमे ज्ञात्रं[2]ञ्चमे सूश्चमे प्रसूश्चमे सीरंचमे लयश्चमे[3] ऋतञ्चमेऽमृतंचमेऽयक्ष्मंचमेऽनामयच्चमे जीवातुश्चमे दीर्घायुत्वञ्चमेऽनमित्रञ्चमेऽभयंचमे सुगंञ्चमे शयनंचमे सूषाचमे[4] सुदिनंचमे ॥ ३ ॥

नम आव्याधिनीभ्यो विविध्यद्भ्यश्च वो नमो। नम उगणाभ्यः तृँहतीभ्यश्च वो नमो। नमो व्राते-

भ्यो व्रातपतिभ्यश्च वो नमो । नमो गणेभ्यो गणप-
तिभ्यश्च वो नमो । नमः कृच्छ्रेभ्यः कृच्छ्रपतिभ्यश्च
वो नमो । नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो ।
नमः सेनाभ्यः सेनानीभ्यश्च वो नमो । नमो रथि-
भ्यो [2]वैरूथिभ्यश्च वो नमो । नमो महद्भयोऽर्भकेभ्य-
श्च वो नमो । नमो युवाभ्य आशि[3]नेभ्यश्च वो नमो ।
नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो । नमः तक्ष-
भ्यो रथकारेभ्यश्च वो नमो । नमः कुलालेभ्यः कर्मा-
रेभ्यश्च वो नमो । नमः पुञ्जिष्ठेभ्यो निषादेभ्यश्च वो
नमो । नमः श्वनिभ्यो मृगयुभ्यश्च वो नमो ।
नमः श्वभ्यः श्वपातिभ्यश्च वो नमः ।

ऊर्क्चमे सूनृताचमे पयश्चमे रसश्चमे घृतञ्चमे मधुश्चमे
सग्धिश्चमे सपीतिश्चमे कृषिश्चमे वृष्टिश्चमे जैत्रञ्चम औद्भि-
द्यंचमे ❀ रयिश्चमे रायश्चमे पुष्टञ्चमे पुष्टिश्चमे विभुचमे
प्रभुचमे पूर्णञ्चमे पूर्णतरंचमे कुयवाश्चमेऽक्षितञ्चमेऽन्न-



१ नि २ अरथेभ्यश्च ३ सि ४ गा ५ द्र । ६ । श्वं ७ तिश्च

ऽचमेऽणुश्चमे ॐ व्रीहयश्चमे यवाश्चमे माषाश्चमे तिलाश्च
मे नीवाराश्चमे श्यामाकाश्चमेऽणवश्चमे प्रियङ्गवश्चमे
गोधूमाश्चमे मसूराश्चमे मुद्गाश्चमे खल्वाश्चमे ॥ ४ ॥

नमो भवाय च रुद्राय च। नमः शर्वाय च पशुपतये च। नमो नीलग्रीवाय च शितिकण्ठाय च। नमो व्युप्तकेशाय च कपर्दिने च। नमः सहस्राक्षाय च शतधन्वने च। नमो गिरिशाय च शिपिविष्टाय च। नमो मीढुष्टमाय चेषुमते च। नमो ह्रस्वाय च वामनाय च। नमो बृहते च वर्षीयसे च। नमो वृद्धाय च सवृद्ध्वने च। नमोऽग्र्याय च प्रथमाय च। नम आशवे चाजिराय च। नमः शीभ्याय च शीघ्र्याय च। नम ऊर्म्याय चावस्वन्याय च। नमो नाद्याय च द्वीप्याय च ॥

अश्माचमे मृत्तिकाचमे गिरयश्चमे पर्वताश्चमे सिकताश्चमे वनस्पतयश्चमे हिरण्यञ्चमेऽयश्चमे सी-

संचमे त्रपु[1]चमे श्यामंचमे लोहितायसंचमे ❀ अग्निश्चम आ-
पश्चमे वीरुधश्चम ओषधयश्चमे कृष्टप[2]च्याश्चमेऽकृष्टप-
[2]च्याश्चमे ग्राम्याश्चमे पशव आरण्याश्चमे वित्तंचमे वि-
त्तिश्चमे भूतंचमे भूतिश्चमे ❀ वसुचमे वसतिश्चमे कर्मचमे
शक्तिश्चमेऽर्थश्चम ए[3]मश्चम ईत्याचमे गतिश्चमे ॥ ५ ॥

नमो ज्येष्ठाय च कनिष्ठाय च । नमः पूर्वजाय
चापरजाय च । नमो मध्यमाय चाप्रगल्भाय च ।
नमो बुध्याय च जघन्याय च । नमः सोभ्याय च
प्रतिसर्याय च । नम आशुषेणाय चाशुरथाय च ।
नमो बिल्मिने च कवचिने च । नमो वर्मिणे च व-
रूथिने च । नमः शूराय चावभेदिने च । नमः श्रु-
ताय च श्रुतसेनाय च । नमो याम्याय च लोम्याय
च । नम उर्वर्याय च खल्याय च । नमः श्लोक्याय
चावसान्याय च । नमः श्रवाय च प्रतिश्रवाय
च । नमो वन्याय च कक्ष्याय च ॥



१ श्र २ च्यं ३ ड ४ इतिश्च ५ चापगल्भाय (चाप्रगल्भाय)

अग्निश्चम इन्द्रश्चमे सोमश्चम इन्द्रश्चमे सविताचम इन्द्रश्चमे सरस्वतीचम इन्द्रश्चमे पूषाचम इन्द्रश्चमे बृहस्पतिश्चम इन्द्रश्चमे ❀ मित्रश्चम इन्द्रश्चमे वरुणश्चम इन्द्रश्चमे धाताचम इन्द्रश्चमे त्वष्टाचम इन्द्रश्चमे विष्णुश्चम इन्द्रश्चमेऽश्विनौचम इन्द्रश्चमे मरुतश्चम इन्द्रश्चमे विश्वेचमे देवा इन्द्रश्चमे ❀ पृथिवीचम इन्द्रश्चमेऽन्तरिक्षंचम इन्द्रश्चमे द्यौश्चम इन्द्रश्चमे समाश्चम इन्द्रश्चमे नक्षत्राणिचम इन्द्रश्चमे दिशश्चम इन्द्रश्चमे ॥ ६ ॥

नमो दुन्दुभ्याय चाहनन्याय च । नमो धृष्णवे च प्रमृशाय च । नमो निषङ्गिणे चेषुधिमते च । नमः तीक्ष्णेषवे चायुधिने च । नमः स्वायुधाय च सुधन्वने च । नमः स्रुत्याय च पथ्याय च । नमः काट्याय च नीप्याय च । नमो नाद्याय च वैशन्ताय च । नमः कुल्याय च सरस्याय च । नमः कूप्याय चावट्याय च । नमो वर्ष्याय चावर्ष्याय च । नमो मेघ्याय च विद्युत्याय च । नमो वीध्रयाय चात-

प्याय च । नमो वात्याय च रेष्म्याय च । नमो वास्तव्याय च वास्तुपाय च ।

अँशुश्चमे रश्मिश्चमेऽदाभ्यश्चमेऽधिपतिश्चम उपाँशुश्चमेऽन्तर्यामश्चम ऐन्द्रवायवश्चमे मैत्रावरुणश्चम आश्विनश्चमे प्रतिप्रस्थानश्चमे शुक्रश्चमे मन्थीचमे ❀ आग्रयणश्चमे[1] वैश्वदेवश्चमे ध्रुवश्चमे वैश्वानरश्च म ऋतुग्रहाश्चमेऽतिग्राह्याश्चम ऐन्द्राग्नश्चमे वैश्वदेवश्च मे मरुत्वतीयश्चमे[2] माहेन्द्रश्चमे[3] आदित्यश्चमे सावित्रश्चमे सारस्वतश्चमे पौष्णश्चमे पात्नीवतश्चमे[4] हारियोजनश्चमे[5] ❀ स्रुचश्चमे[6] चमसाश्चमे ॥ ७ ॥

नमः सोमाय च रुद्राय च । नमः ताम्राय चारुणाय च । नमः शङ्गवे च पशुपतये च । नम उग्राय च भीमाय च । नमो हन्त्रे च हनीयसे च । नमोऽग्रेवधाय च दूरेवधाय च । नमो वृक्षेभ्यो हरिकेशेभ्यः ॥ नमस्ताराय । नमः शम्भवे च । मयोभवे च ।

१ आग्रायण (आग्रायण) २ मारुत्वतीयाः ३ महेन्द्रीयश्चमे ४ पत्नी ५ हरि ६ स्रुक्षमे ७ स [illegible]

नमः शङ्कराय च । मयस्कराय च । नमः शिवाय च
शिवतराय च । नमः किंशिलाय च क्षयणाय च ।

वायव्यानिचमे द्रोणकलशश्चमे पूतभृच्चमेऽपूतभृच्चमे ग्रा-
वाणश्चमेऽधिषवणेचमेऽवभृथश्चमे स्वगाकारश्चमे ॥ ८॥

नम इरिण्याय च प्रपथ्याय च । नमः पुलस्तिने
च कपर्दिने च । नमो गोष्ठ्याय च गृह्याय च ।
नमः तल्प्याय च गेह्याय च । नमः पार्याय चावा-
र्याय च । नमः प्रतरणाय चोत्तरणाय च । नमस्ती-
र्थ्याय च कूल्याय च । नमः फेन्याय च शष्प्याय
च । नमः सिकत्याय च प्रवाह्याय च । नमो ह्रद-
व्याय च निवेष्प्याय च । नमः काट्याय च गह्वरे-
ष्ठ्याय च । नमः शुष्क्याय च हरित्याय च । नमो
लोप्याय चोलप्याय च । नमः पाँसव्याय च रज-
स्याय च । नमः सूर्म्याय चोर्म्याय च । नमः पर्णाय
च पर्णशादाय च । नम आखिदते च प्रखिदते च ।

नमोऽभिघ्नते चापगुरमाणाय च । नम आखिदाय च विखिदाय च । नमो वः किरिकेभ्यो देवानाँ हृदयेभ्यो नमो विचिन्वत्केभ्यो नमो विक्षिणत्केभ्यो नम आनिर्हतेभ्यः ।

अग्निश्चमे घर्मश्चमेऽर्कश्चमे सूर्यश्चमे प्राणश्चमेऽश्वमेधश्चमे पृथिवीचमे दितिश्चमेऽदितिश्चमे द्यौश्चमे शक्करीरङ्गुलयो दिशश्चमे यज्ञेन कल्पन्तां व्रतञ्चर्तुश्च संवत्सरश्च दीक्षाच तपश्चाहोरात्रे ऊर्वष्ठीवे बृहद्रथन्तरेचमे यज्ञेन कल्पेताम् ॥ ६ ॥

द्रापे अन्धसस्पते दरिद्र नीललोहित आसां प्रजानामेषां पुरुषाणामेषां पशूनाम् । मा भेर्मा रोङ्मो नः किञ्चनाममत् ॥ इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः । यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी । शिवा रुत-



१ शिवा करे ६ ३ ह

स्य भेषजी तया नो मृळ जीवसे ॥ परि णो रुद्रस्य
हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः । अव स्थि-
रा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृळ ॥
मीढुष्टम शिवतम शिवो नः सुमना भव । परमे वृक्ष
आयुधं निधाय कृत्तिं वसान आचर पिनाकं बिभ्र-
दागहि । विकिरिद्र विलोहित नमस्ते अस्तु भगवः ।
यास्ते सहस्रँ हेतयोऽन्यमस्मन्नि वपन्तु ताः ॥

त्र्यविश्चमे त्र्यवीचमे दित्यवाट्चमे दित्यौहीचमे पञ्चावि-
श्चमे पञ्चावीचमे त्रिवत्सश्चमे त्रिवत्साचमे तुर्यवाट्चमे
तुर्यौहीचमे ❀ पष्ठवाट्चमे पष्ठौहीचमे उक्षाचमे वशाचमेऽनु-
ड्वाँश्चमे धेनुश्चमे ❀ ऋषभश्चमे वेहश्चमे ॥ १० ॥

सहस्रधा सहस्राणि हेतयस्तव बाह्वोः । तासामी-
शानो भगवः पराचीना मुखा कुरु ॥

असङ्ख्याताः सहस्राणि ये रुद्रा अधि भूम्याम् ।
तेषाँ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ येऽस्मि-

न्महत्यर्णवेऽन्तरिक्षे भवा अधि। तेषाँ स० ॥ ये नीलग्रीवाः शितिकण्ठा दिवँ रुद्रा उपाश्रिताः। तेषाँ०॥ ये नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः। तेषाँ स० ॥ ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः। तेषाँ स० ॥ ये भूतानामधिपतयो विशिखासः कपर्दिनः। तेषाँ स० ॥ ये पथीनां पथिरक्षय ऐळमृदा यव्युधः। तेषाँ स० ॥ ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः। तेषाँ स० ॥ येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्। तेषाँ स० ॥ य एतावन्तो वा भूयाँसो वा दिशो रुद्रा वितस्थिरे। तेषाँ स०॥ नमो अस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वाः। तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृळयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥



१ ऐलबृदा ऐलभृत २ युयुधः ३ तस्थ

नमो अस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां वात इषवः ते-
भ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीची-
र्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृळ-
यन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः ॥
नमो अस्तु रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः ते-
भ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीची-
र्दशोर्ध्वाः । तेभ्यो नमो अस्तु ते नोऽवन्तु ते नो मृळ-
यन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तमेषा जम्भे दध्मः ॥
एकाचमे तिस्रश्चमे तिस्रश्चमे त्रियस्त्रिंशच्चमे चतस्रश्चमे
ऽष्टौचमेऽष्टौचमेऽष्टाचत्वारिंशच्चमे ॥

वाजश्च प्रसवश्चापिजश्च क्रतुश्च वाक्पतिश्च वसुश्च स्व-
र्मूर्धा मूर्धा वै यशनो ऽयश्वाँ आन्त्योन्त्यो भौवनो भुवनस्य
पतिः प्रजापतिराधिपतिरियन्ते राण्मित्रो यन्तासि यमन
ऊर्जे त्वा वृष्ट्यै त्वा प्रजानां त्वाधिपत्यायायुर्यज्ञेन कल्पतां
मनो यज्ञेन कल्प० प्राणो यज्ञेन कल्प० चक्षुर्यज्ञेन क० श्रो-
त्रं यज्ञेन क० वाग्यज्ञेन [illegible] यज्ञेन क० ब्रह्मा यज्ञेन

क० पृष्ठं यज्ञेन क० यज्ञो यज्ञेन कल्पतां ऋक्च साम च स्तोमश्च यजुश्च बृहच्च रथन्तरञ्च स्वर्देवा अगन्म प्रजापतेः प्रजा अभूवन्नमृता अभूम वेट्स्वाहा ॥ ११ ॥

वाजस्य नु प्रसव इति षट् ॥

विश्वे अद्य मरुतो विश्व ऊती विश्वे[1] भवन्त्वग्नयः समिद्धाः। विश्वे नो[2] देवा अवसागमन्तु[3] विश्वमस्तु द्रविणं वाजो[4] अस्मे ॥ आ मा वाजस्य प्रसवो जगम्यादा मा द्यावापृथिवी विश्वरूपे। आ मा गन्तां पितरा मातरा चा मा सोमो अमृतत्वेन गम्यात् ॥ वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे। यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म्म साविषत् ॥ वाजो नः[3] सप्त प्रदिशश्चतस्रो वा परावतः। वाजो नो[3] विश्वैर्देवैर्धनसाताविहावतु ॥ वाजो मे अद्य प्रसुवाति दानं वाजो देवान्हविषा वर्धयाति। वाजस्य हि प्रसवेनन्नमेति विश्वा आशा वाजपतिर्जयेयम् ॥ वाजः पुरस्तादुत मध्यतो नो वाजो देवानृतुभिः कल्पयाति। वाजस्य हि प्रसवेनन्नमेति सर्वा आशा



१ विं २ त्विह ३मा ४ वाजो अस्मिन्

वाजपतिर्भवेयम् ॥ सं मा सृजामि पयसा पृथिव्या[1]: सं मा सृजाम्यद्भिरोषधीभिः[2] । सोऽहं वाजँ सनोम्यग्ने[3] ॥ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः[4] । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥

तेजोऽसि० योरुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै[5] रुद्राय नमो अस्तु देवाः ॥ तर्पणम् मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां विधाय । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥ नित्यं दण्डी नित्ययज्ञोपवीती नित्यं ध्याता भस्मना कर्मबन्धी । रुद्रं दृष्ट्वा देवमीशानमुग्रं याति स्थानं तेन साकं तदीयम् ॥

अनेन चमानवाकसहितरुद्रमन्त्रपाठेन (होमेन) आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं । श्रीमहारुद्रदेवतासन्तोषणार्थं । भगवान् अघोरः तत्पुरुषः सद्योजातः वामदेवः असुरबलहा ईशानः बहुरूपः विश्वरूपः त्र्यम्बकः त्रि-



१ घृतेन २ अपः ३ सेनयमन्न, म्यग्ने: ४ धाम् ५ दाता

नेत्रः त्रिशूलहस्तः महामृत्युञ्जयभट्टारकः शतरुद्रेश्वरः वृष-
भवाहनः सानुचरः सपरिवारः भवो देवः ८ पार्वतीसहितः
परमेश्वरः प्रीयतां प्रीतोऽस्तु ॥

॥ इति रुद्रमन्त्रसहितचमकानुवाकाः समाप्ताः ॥

॥ नमः शिवाय ॥

संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्धितेजोरुणं गम्भीरस्मितनिःसृतांशुदशन-
प्रोद्भासिताम्राधरम् । भालेन्दूज्ज्वललोलपिङ्गलजटाभारप्रबद्धोरगं वन्दे
सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥ १ ॥ कालाभ्रभ्रमराञ्जनद्युतिनि-
भं व्यावृत्तपिङ्गेक्षणं बालेन्दूदयनिःसृतांशुदशनप्रोद्भिन्नदंष्ट्रांकुरम् । सर्पप्रो-
तकपालशक्तिकलशव्याकीर्णसच्छेखरं वन्दे दक्षिणमीश्वरस्य कुटिलभ्रूभङ्गरौ-
द्रं मुखम् ॥ २ ॥ प्रालेयामलमिन्दुकुन्दधवलं गोक्षीरफेनप्रभं भस्माभ्यङ्गम-
नङ्गदेहदहनं ज्वालावलीलोचनम् । ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यार्चितं
योगिभिर्वन्देऽहं सकलं कलङ्करहितं स्थाणोर्मुखं पश्चिमम् ॥ ३ ॥ रक्तं कु-
ङ्कुमपिङ्गलं सतिलकं व्यापाण्डुगण्डस्थलं भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्त-
कर्णोत्पलम् । स्निग्धं बिम्बफलाधरं प्रहसितं लीलालकालङ्कृतं वन्दे पूर्ण-
शशाङ्कमण्डलनिभं वक्त्रं हरस्योत्तरम् ॥ ४ ॥ व्यक्ताव्यक्तगुणोत्तरं च वरदं
षट्त्रिंशतत्त्वात्मकं तस्मादुत्तरतत्त्वमक्षयमिति ध्यानं सदा योगिभिः । वन्दे
तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं शान्तं पञ्चममीश्वरस्य वदनं खं-
व्यापितेजोमयम् ॥ ५ ॥ यद्दैत्यासुरकन्यकाकरशतैः संवीज्यते चामरैः पुंना-
गाम्बुजनागजातिबकुलैराशीविषैश्चार्चितम् । ज्वालामालसहस्रदीप्तिकिरणं
कालाग्निरुद्रं महत्तत्संहारकरं नमामि मनसा पातालसंस्थं मुखम् ॥ ६ ॥ एता-
नि सर्ववदनानि महेश्वरस्य ये कीर्तयन्ति मनुजाः सततंप्रभाते । ते पर्यटन्ति
गगने सुमहत्प्रकाशा गच्छन्ति ते शिवपदं रुचिरैर्विमानैः ॥ ७ ॥

इति श्रीहनुमानकृतं सागरलङ्घनं स्वच्छन्दभैरवस्तोत्रं सम्पूर्णम् ॥



१ अर्धेन्दुद्युति २ सिद्धसुरासुरैः प्रणमितं ३ पदे